बालसरस्वतीग्रन्थावलिः

[सोपानं द्वितीयम् ग्रन्थाङ्कः २.]

# सन्तानगोपालप्रबन्धः

अश्विनीयुवराजविरचितः



प्रसाधकः

वि. कृष्णन् तम्पि, बि. ए.,

अनन्तशयनस्थराजकीयसंस्कृतविद्यामन्दिराध्यक्षः

श्रीधरमुद्रालयः।

अनन्तशयनम्।

१९१५.

# निवेदना।

सुविदितमिदं सकलजगतां प्रथितनामधेयः **श्रीवञ्चिकुलशेखरवंशः** स्थिरतरः खल्वालम्बः सरसकलानां भारतीयानाम्, विशिष्य सुरसरस्वत्या इति। विदितं च पुनरेतेषां ये किल रसज्ञाः सङ्गीते साहित्यामुभयत्र वा, यदेनमत्युज्ज्वलयितुमात्मनो यशश्चन्द्रिकया परमभागवतः सहृदयाग्रेसरः **श्रीस्वातिमहाराज** इति। काममस्य कृतयो बाढमधमर्णीकृतसकलरसिकलोका, नाद्यापि साकल्येन प्रकाशमनायिषत। विश्रूयते पुनर्द्वितीयस्तद्वंश्यः प्राक्तनोऽस्मात्, अद्वितीयः पण्डितः सङ्गीतज्ञः कविरैन्द्रजालिकश्च **युवराजोऽश्विनीनक्षत्रजातः**। किन्तु केरलेषु केवलं कीर्त्तिरस्य लब्धप्रसरा यद् ग्रन्थचतुष्टयं प्रसिद्धतममस्य गैर्वाणीभूयिष्ठामपि कैरलीमेवाश्रयते।

अयं हि प्रबन्धः परिमितपुटः सरसललितः * **सन्तानगोपालो** नाम प्राणीयत किलानेन युवराजेन। ययातिचरितनाम्नः सङ्गीतनाटकस्य मुद्रणे प्रयतमानेन मया व्यापार्यमाणो ग्रन्थस्य तस्य पाठान्तराणि विचिन्वानश्च, प्रियशिष्यो मे वे वेङ्कटरामशर्माऽकस्मात् समासाद्य आदर्शद्वयं प्रबन्धस्यास्य सद्यं हस्तं मे प्रापयत्॥ अयं च ग्रन्थावल्यामस्यां समुचितं सोपानं द्वितीयमधिरोप्य प्रकाश्यते।


अनन्तशयनम्<br>
४-१०-१९ } वि. कृष्णन् तम्पि.


* सङ्गीतनाटकमिदं भूयः संशोधितमचिरात् प्रकाश्येत ग्रन्थावल्यामस्याम्।

॥ श्री ॥

# सन्तानगोपालप्रबन्धः ।



पुष्यत्सौरभपारिजातकुसुमद्रास्तोरणस्रग्विणीं
द्यामेव प्रतिबिम्बितां जलनिधौ यामाशशङ्के जनः ।
साकं निष्प्रतिमप्रतापगरिमभ्राजिष्णुभिर्वृष्णिभिः
श्रीकृष्णःससुखं सगर्भ्यसहितस्तामध्यवात्सीत्पुरीम् ॥

विहितभुवनभद्रे वासुभद्रे धरित्री-
भरहरणविनिद्रे भूरिकारुण्यसान्द्रे ।
न परमखिललोका द्वारवत्यां जगत्या-
मुदधिवलयवत्यां हृष्टपुष्टा बभूवुः ॥

एवमेव ससुखमेधमानेषु सकललोकेषु द्वारवत्यां तु द्विजन्मनः कस्यचिदपत्याष्टकं जातमात्रनष्टमजनिष्ट ।

राजद्वारि मृतं निधाय तनयं "कास्ते निरस्तत्रपः
कृष्णः स्त्रीजनलम्पटः क्वनु हली हालामदान्धाशयः" ।
इत्युच्चैर्गिरमुद्गिरन् द्विजवरः क्षिप्रं प्रपेदे सभां
नीरन्ध्रान्धकवृष्णिवीरमकुटीरत्नाङ्कुरोद्यत्प्रभाम् ॥

पुत्रसन्तानसम्भूतचित्तं पृथ्वीसुरं तदा ।
आगन्तुको जनस्त्वेनमाकुलस्समलोकत ॥

तत्र च विचित्रमणिवेदिकानिरन्तरे सभान्तरे समाक्रान्तकनकागाराशिखरेषु केसरिप्रवरेष्वपरवारणप्रकोटितविक्रमेषु महारजतविष्टराधिष्ठितेषु वृष्ण्यन्धकपरिवृढेषु रोहिणीनयनानन्दकरे पूर्णिमानिशाकर इव पूर्वगिरिशृङ्गं तुङ्गतरं भद्रासनवरमलङ्कुर्वाणे सङ्कर्षणे सन्ध्यारागपीताम्बरप्रसृमरप्रभानिकुरुम्बे नीलाम्बुदकदम्ब इव चरमगिरिकूटमनघमणिपीठमालम्बमाने लोलम्बमानापनोदनपटुतराङ्गसुषमाभरे दामोदरे जगत्रयीनिरङ्कुशशक्तिप्रसरे कुमार इव मयूरपृष्ठं मणिभद्रासनमध्यमध्यासीने महेन्द्रनन्दने महीयस्तरेष्वपरेष्वपि सभास्तारेषु यथोचितमुपविष्टेषु समिद्धरोषबाडवस्सबाडवप्रवरः सोरस्ताडमब्रह्मण्यमुच्चैरुद्धोषयन् मृतसुतमुखेन्दुसन्दर्शनक्षुभितहृदयशोकसागरतरङ्गशङ्कावहैरश्रुवाहैस्सह रूक्षतराणि कानिचिदक्षराणि निरर्गलं निर्गलयामास ।

अष्टौ नष्टास्तनूजाः कितव तव दुराचारतश्चोरवृत्तेः
कष्टं भोः कष्टमेतन्नवममपि सुतं बालमालोकयेति ।
भूयो भूयो वचोभिः श्रवणकटुतरैर्भर्त्सयन्तं द्विजन्तं
दृष्ट्वा देवस्तदानीमतनुत कुहनामानुषो मौनमुद्राम् ॥

ततश्चैवमादीनि वचनानि मुहुरुल्लपन्तं ~ विलपन्तं करुणासागरे पतन्तं द्विजन्तमुपसान्त्वयन् परन्तपस्स कौन्तेयः

शकुन्तराजकेतनप्रलम्बशासनप्रमुखेषु वृष्णिवीरेषु शृण्वत्सु प्रकटितनिजगर्वगरिमधुरां मधुरां गिरमभाषिष्ट ।

भो भो ब्रह्मकुलावतंस भवतः सूनुं पुनर्भाविनं
पाता पाकरिपोः सुतः सुतकृते शोकं वृथा मा कृथाः ।
सन्त्रातुं भुजतेजसा त्रिभुवनं शौण्डस्य गाण्डीविनः
कस्याप्यस्य शिशोः किमत्र भवतस्त्राणं भवेद्दुष्करम् ॥

वृष्णिश्रेष्ठा भुवनविदिताः कृष्णसङ्कर्षणाद्या-
स्त्रातुं शक्ता न किल तनयं प्राणहर्तुः कृतान्तात् ।
सोऽहं रक्षाम्युपरि यदि ते स्यात्तनूजो द्विजन्मन्नि-
त्थङ्कारं तव तु वचनं के पुनः श्रद्दधीरन् ॥

पृथुलशोकविकर्शितवर्ष्मणा
बहुविकल्पसमाकुलचेतसा ।
द्विजवरेण पृथातनुजः पुन-
र्निजगदे जगदेकधनुर्धरः ॥

पृथुलभुजबलानलावदग्ध-
द्विषदबलास्तनशैलपत्रवल्ली ।
यदुपरिषदपि प्रगल्भते न
स्वयमवितुं बलदेवकृष्णमुख्या ॥

नाहं शौरिर्न खलु मुसली नानिरुद्धो न साम्बो
न प्रद्युम्नो भुवनविदितः पाण्डवः फल्गुनोऽहम् ।
व्यक्तं वक्ति स्मरहरशिरश्चण्डकोदण्डकाण्ड-
प्रौढाघातव्रणकिणगणग्रन्थि बाह्वोर्बलं मे ॥

अपिच ——

शृणुत शृणुत सर्वे पाण्डुसूनोः प्रतिज्ञां
सदसि पुनरपत्यं भावि भूमीसुरस्य ।
करधृतशरचापः पालयिष्यामि नो चे-
त्सकलजनसमक्षं सन्निवेक्ष्ये हुताशम् ॥

कर्णप्रणाल्या त्वखिलप्रसारी
कर्णारिवाक्यामृतसान्द्रपूरः ।
अमानिवान्तर्बहिरुत्पपात
प्रमोदजन्माश्रुमिषादमुष्य ॥

अथ पृथिवीसुरवरः पृथासुतमुखेन्दुगलितकलवचनामृतैरात्मीयकर्णाञ्जलिपुटसम्भृतैरभिषिच्य पृथुलपृथुकशोकपावकपरिप्लुष्टां प्रणयिनीमनोरथवल्लीं पल्लवयामास ।

दिने दिने पुत्रशुचा विसोढया
सहैव मासेषु गतेषु केषुचित् ।
समं प्रमोदेन निजोदरे सती
पुनश्च गर्भं बिभराम्बभूव सा ॥

प्रत्यासन्ने प्रसवसमये विप्रवर्यैः सधैर्यैः
प्रोचे पार्थं सकलककुभां जित्वरं सत्वरं सः ।
आकर्ण्यैतद्गदितमुदितानन्दमन्तर्द्विजस्य
प्राप्यागारं व्यतनुत शरैः सूतिकापञ्जरं सः ॥

अन्तः प्रविश्य पुनरस्य पतिव्रताया-
मन्तःस्फुरत्प्रसवसङ्कटतीव्रतायाम् ।
अष्टासु दिक्ष्ववहितः प्रहितात्मदृष्टि-
स्तस्थौ स गाण्डिवशरासनदत्तदृष्टिः ॥

जातं जातमपत्यमक्षियुगलग्राह्यं क्षणं तत्पुन-
स्त्वन्तर्धिं द्रुतमद्य वैद्युतमिव ज्योतिर्जगाहे पुरः ।
हाहा निष्करुणेन दैवहतकेनैते जना वञ्चिताः
इत्युच्चैःकरुणं विलापमशृणोत्तस्मिन् क्षणे पाण्डवः ॥

अथ तथा वितथमनोरथः पृथिवीसुरवरो विशृंखलप्रसराभिरश्रुधाराभिरनुपदं तमुद्देशमनूपयन् हाधिगमुना जनेन मूढजनमूर्धाभिषिक्तेन क्लीबजनगलगर्जितविस्रब्धचित्तेन सरससुधारसतरङ्गिताशिशिरतरकटाक्षमोक्षः सरसीरुहाक्षोप्यवज्ञातः कथं पुनरयं कृपणजनबन्धुं कृपासिन्धुं द्रक्ष्यामि वक्ष्यामि च दशामिमां चलितोहममुना शठेनेत्यपत्यलोपशतगुणितमन्युः शतमन्युसूनुं समाचष्टे ।

सत्यव्रतस्य जगति प्रथितस्य तस्य
धर्मात्मजस्य धुरि धर्मभृतां स्थितस्य ।
व्रीलाभरावनतमाननमद्य लोक
आलोकयिष्यति कथं तव दुश्चरित्रैः ॥

पूर्वं गर्वसमन्वितं मम पुरः किं किं न सञ्जल्पितं
वीरम्मन्य वृथा त्वया सशपथं मौढ्येन मध्येसभम् ।
आस्तां तत्सकलं यथेह विषहे पापस्तथा ते पिता
पुत्रापत्तिशुचं शचीपरिवृढस्सोढा कथं कथ्यताम् ॥

विद्यामासाद्य सद्यः शतमखमुखदिङ्नायकानां निकाये-
ष्वन्विष्यान्विष्य सूनुं धरणिसुमनसश्चण्डकोदण्डकाण्डः ।
अन्तःसन्तापलज्जाभरभरणपरिम्लानवक्त्राम्बुजश्री-
र्भूयोपि द्वारवत्यां स खलु निववृते तत्र पार्थोप्यपार्थः ॥

ततश्च वारीनिरुद्ध इव वारणपतिर्दीर्घनिःश्वासपिशुनितहृदयसन्तापस्तत्तादृगयशःपयोराशिजठरनिमज्जनजनितजडिमशिशमयिषेवाञ्जसा धनञ्जयोपि धनञ्जयमेधोभिः समेधयामास ।

प्रदक्षिणीकृत्य सुरेन्द्रसूना-
वक्षाय वह्नौ पतितुं प्रवृत्ते ।
तदन्तरायं तरसा चिरांशु-
पीताम्बरः कृष्णघनस्ततान ॥

अथ खलु, निखिलसुरासुरनरतिर्यगादिविविधजीव-निकायहृदयनिवासः श्रीनिवासः स्वकीयं हृदयं स्वकीयमिव सकलविस्रम्भभाजनं दिव्ययुवतिगीतभव्ययशःशालिनं सव्यसाचिनं उभयथाकृतकृष्णवर्त्मानुसरणनिश्चयं निश्चित्य ससम्भ्रममन्तःपुरादुत्थाय देहद्युतिव्यूहविहितदेवमहिलावहेलाभिर्दरोदरकेळिग्राहिलाभिर्महिलाभिरप्यनामन्त्र्य सुत्रामपुत्रनिस्तुलभक्तिसूत्रनियन्त्रितहृदयतया तदात्वोदित्वरत्वराभिसरणपारिप्लवांसयुगलात्पथि शिथिलं गाङ्गेयपिशङ्गमुत्तरासङ्गमुत्सृज्य दीर्घनिःश्वसितवातावधूतवनमालापरिमळलोभवलमानमधुपकुलकोलाहलदत्तानुयात्रया विचित्रया गिरा दूरादेव सशपथनिवारिततदीयसाहसकर्मा घर्माम्बुजालकप्रालेयबिन्दुसन्दोहसुन्दरमुखारविन्दः श्लथमाल्यबन्धकुन्तलकलापकमनीयफालबालशिशिरद्युतिर्निकटभुवमतिविकटं पर्यटन् प्रलयकालकठोरकिरण इव सकलकाष्ठावदाहपटीयसि बहळरोचिषि बर्हिर्षि पतन्तं प्राचीनबर्हिषः सुतं तं समभ्यस्तलक्ष्मीस्तनकस्तूरिकापत्रमकरेण करेण प्रगृह्य धरित्रीपृष्ठमधिष्ठापयामास ।

कथाशेषान् शेषानपि किल पृथायास्तनुभुवः
सुधाभानोर्वंशं परिमुषितमुक्तामणिपरम् ।
सखे त्वं स्वल्पेऽर्थे वलमथनमस्त्रार्द्रनयनं
कथंकारं कर्तुं त्रिजगदपवीरं व्यवसितः ॥

त्वं मे सखा त्वमसि मे सुहृदम्बुजाक्ष
त्वं मे गुरुस्त्वमसि मे परदैवतं च ।
इत्यादि मां प्रति सखे प्रणिगाद्य पूर्वं
तेन त्वयाहमधुना किमुदीरयामि ॥

आलम्ब्य सख्युः करमम्बुजाक्षः
करेण भृत्यार्तिहरेण सद्यः ।
आशास्पदं गोकुलसुन्दरीणां
पाशायुधाशाभिमुखः प्रतस्थे ॥

ततश्च तौ सप्रमोदं विप्रसूनुविलोकनविवृद्धतृष्णौ सैन्य-सुग्रीवमेघपुष्पवलाहकनामधेयैरनुपमरूपधेयैः मनःपवमानबान्धवैः सैन्धवैः सनाथं रथमधिष्ठाय यथोत्तरद्विगुणितपरिणाहवद्भिस्सप्तभिरुदन्वद्भिस्सह लोकलोचनमरीचिमालापरिचुम्बितैकपार्श्वतलं लोकालोकशैलमुल्लंघ्यबहळजम्बाळजालमलीमसतमःकबलितसकलावकाशं कञ्चन प्रदेशमालक्ष्य तत्क्षणं वलक्षवाहने ससाध्वसं मधुसूदनमवलम्बमाने करुणाकरस्तरुणतामरसलोचनः सैंहिकेयकामिनीकमनीयकुचकलशपत्राङ्कुरप्रत्यूहकरं सान्द्रतमसन्तमसघस्मरप्रभाभरं स्वायुधप्रवरं सस्मार ।

भास्वद्भास्करभासुरारनिकरप्रोद्यच्छदुस्रच्छटा-
सद्यः क्लृप्तकरालमांसलतमोभङ्गं रथाङ्गाभिधम् ।
वैकुण्ठस्य सुरारिकण्ठकदलीकाण्डाटवीकर्तन-
क्रीडाजस्रविनोदसाधकतमं प्रादुर्बभूवायुधम् ॥

ततश्च, प्लवङ्गमविहङ्गमध्वजौ जाज्वलद्वज्रमणिप्रवलयदीप्रपरिसरं परिखोदरपरिभासुरसरसीरुहपरिमेदुररसलोलुपतरमानसमधुपारवमुखरीकृतहरिदन्तरं भद्रतमविद्रुमस्तम्भविद्योतमानमरतकमणिगोपुराट्टालशिखरनिकरनिषण्णपरमभागवतोपगीयमानमधुसूदनविविधापदानं अनघमणिघृणिधौतकळधौतमयसौधशिखरविराजमानकनकवैजयन्तीशतकलितताटिल्लताविलासं चन्द्रकान्तमणिशिलालवालशालिविशालसालकुलकुलायमानसकलशुकशारिकापरिपठ्यमानपरमपावननामघोषं श्यामतुलसिकावनसुखनिषण्णपरमर्षिपरिषदुद्घुष्यमाणपुरुषसूक्तादिविविधसूक्तं, सत्यलोकमिव नित्यमुदितपद्मासनं परमहंसकुलसेव्यमानं च वृषकेतननिकेतनमिव सततसन्निहितविनायकोपशोभितं सर्वमङ्गलोपेतं च शिशिरभानुमण्डलमिव हरिणाहितप्रतिष्ठमशेषतमोहरणवरिष्ठं चावाङ्मनसगोचराद्भुतनिधानं वैकुण्ठाभिधानं लोकमवलोकयाञ्चक्रतुः ।

मिथ्याभूतमिदं विभाति भुवनं यत्सत्यया सत्यव-
द्भक्त्युल्लीढकषायनिर्मलधियः शंसन्ति यं शाश्वतम् ।
यज्ज्योतिः कृतकेतरस्य वचसः पारं परं गाहते
सान्द्रानन्दमयायते भगवते तस्मै परस्मै नमः ॥

कच्चित्कृष्णकिरीटिनौ कुशलिनौ विश्वैकवीरौ युवां
युष्मद्दर्शनकौतुकान्ननु मया नीता द्विजस्यार्भकाः ।
एतत्पोतसमर्पणेन कृपणैस्तद्धर्मदारैः समं
पातं पातमगाधशोकजलधेरन्तर्भजन्तं द्विजम् ॥

तदनु, यदुकुरुवीरसन्दर्शनकन्दलितानन्दजलबिन्दुभरितपक्ष्मणः श्रीवत्सलक्ष्मणो वत्सलतया निजाङ्कतलमारोप्य देदीप्यमानान् दिव्यलोकतरुपल्लवतल्लजपरिमृदुलेन पाणितलेन परामृश्य प्रवृद्धानुकम्पं मूर्ध्नि समाघ्राय व्याघ्रनखभूषानिबद्धबन्धुरकन्धरान् सिन्धुराजकन्यास्तन्यपानमांसलसुकुमारान् वसुन्धरासुरकुमाराननमरलोककुलभाभिमतवितरणपुरःसरं प्रदीयमानानादाय प्रमोदभरोदञ्चितरोमाञ्चकञ्चुकितकलेबरौ मुकुन्दसंक्रन्दननन्दनौ सप्रश्रयं परस्मै पुंसे विज्ञाप्य मूर्तिमता निजमनोरथेनेव रथेन यथागतं प्रस्थितौ सरभसमन्धूनिव सिन्धूनुल्लंघ्य द्वारवतीमास्थितौ दुःसहतरदीर्घशोकोदन्वत्पतिताभ्यां द्विजदम्पतिभ्यामतित्रिदशकुमारान् दशकुमारानश्रमेण विश्राणयामासतुः ।

ततश्च क्षमासुरवरः क्षणमात्रमानन्दमूर्च्छामनुभूय कथमपि शनैर्नयनारविन्दमुन्मील्य प्रमोदभरगद्गदस्वरं सरस्वतीमुत्सारयामास

आशास्यं किं यदुकुरुवरावन्यदस्माद्दशैषा-
माशारन्ध्राण्यभिनवयशःपाळयः क्षाळयन्तु ।
तत्कल्पं विमतविततेर्मन्थितारः प्रतापाः
पृथ्वीं व्यर्थीकृतरविघृणिश्रेणयः शोणयन्तु ॥

विप्राशीर्वचनप्रहृष्टहृदयः कृष्णः समं जिष्णुना
कीर्त्या कार्तिकचन्द्रिकाधवलया भूमण्डलं मण्डयन् ।
इत्थं भक्तविधेयतामतिजगल्लीलाभिराबोधय-
न्नध्यास्त स्वपुरीं पुरन्दरपुरीवन्द्यां जनानन्दयन् ॥

इति अश्विनिपुराजविरचितः
सन्तानगोपालप्रबन्धः
समाप्तः